॥ शाट्यायनीयोपनिषत् ॥

शाट्यायनीब्रह्मविद्याखण्डाकारसुखाकृति ।
यतिवृन्दहृदागारं रामचन्द्रपदं भजे ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥

हरिः ॐ ॥

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥ १॥

समासक्तं सदा चित्तं जन्तोर्विषयगोचरे ।
यद्येवं ब्रह्मणि स्यात्तत्को न मुच्येत बन्धनात् ॥ २॥

चित्तमेव हि संसारस्तत्प्रयत्नेन शोधयेत् ।
यच्चित्तस्तन्मयो भवति गुह्यमेतत्सनातनम् ॥ ३॥

नावेदविन्मनुते तं बृहन्तं
नाब्रह्मवित्परमं प्रैति धाम ।
विष्णुक्रान्तं वासुदेवं विजान-
न्विप्रो विप्रत्वं गच्छते तत्त्वदर्शी ॥ ४॥

अथाह यत्परमं ब्रह्म सनातनं
ये श्रोत्रिया अकामहता अधीयुः ।
शान्तो दान्त उपरतिस्तितिक्षुहु-
र्योऽनूचानो ह्यभिजज्ञौ समानः ॥ ५॥

त्यक्तेषणो ह्यनृणस्तं विदित्वा
मौनी वसेदाश्रमे यत्र कुत्र ।
अथाश्रमं चरमं सम्प्रविश्य
यथोपपत्तिं पञ्चमात्रां दधानः ॥ ६॥

त्रिदण्डमुपवीतं च वासः कौपीनवेष्टनम् ।
शिक्यं पवित्रमित्येतद्बिभृयाद्यावदायुषम् ॥ ७॥

पञ्चैतास्तु यतेर्मात्रास्ता मात्रा ब्रह्मणे श्रुताः ।
न त्यजेद्यावदुत्क्रान्तिरन्तेऽपि निखनेत्सह ॥ ८॥

विष्णुलिङ्गं द्विधा प्रोक्तं व्यक्तमव्यक्तमेव च ।
तयोरेकमपि त्यक्त्वा पतत्येव न संशयः ॥ ९॥

त्रिदण्डं वैष्णवं लिङ्गं विप्राणां मुक्तिसाधनम् ।
निर्वाणं सर्वधर्माणामिति वेदानुशासनम् ॥ १०॥

अथ खलु सौम्य कुटीचको बहूदको हंसः परमहंस
इत्येते परिव्राजकाश्चतुर्विधा भवन्ति । सर्व एते विष्णुलिङ्गिनः
शिखिनोपवीतिनः शुद्धचित्ता आत्मानमात्मना ब्रह्म
भावयन्तः शुद्धचिद्रूपोपासनरता जपयमवन्तो
नियमवन्तः सुशीलिनः पुण्यश्लोका भवन्ति । तदेतदृचाभ्युक्तम् ।
कुटीचको बहूदकश्चापि हंसः
परमहंस इव वृत्त्या च भिन्नाः ।
सर्व एते विष्णुलिङ्गं दधाना
वृत्त्या व्यक्तं बहिरन्तश्च नित्यम् ।
पञ्चयज्ञा वेदशिरःप्रविष्टाः
क्रियावन्तोऽमी सङ्गता ब्रह्मविद्याम् ।
त्यक्त्वा वृक्षं वृक्षमूलं श्रितासः
संन्यस्तपुष्पा रसमेवाश्नुवानाः ।
विष्णुक्रीडा विष्णुरतयो विमुक्ता
विष्ण्वात्मका विष्णुमेवापियन्ति ॥ ११॥

त्रिसन्ध्यं शक्तितः स्नानं तर्पणं मार्जनं तथा ।
उपस्थानं पञ्चयज्ञान्कुर्यादामरणान्तिकम् ॥ १२॥

दशभिः प्रणवैः सप्तव्याहृतिभिश्चतुष्पदा ।
गायत्रीजपयज्ञश्च त्रिसन्ध्यं शिरसा सह ॥ १३॥

योगयज्ञः सदैकाग्रभक्त्या सेवा हरेर्गुरोः ।
अहिंसा तु तपोयज्ञो वाङ्मनःकायकर्मभिः ॥ १४॥

नानोपनिषदभ्यासः स्वाध्यायो यज्ञ ईरितः ।
ॐइत्यात्मानमव्यग्रो ब्रह्मण्यग्ना जुहोति यत् ॥ १५॥

ज्ञानयज्ञः स विज्ञेयः सर्वयज्ञोत्तमोत्तमः ।
ज्ञानदण्डा ज्ञानशिखा ज्ञानयज्ञोपवीतिनः ॥ १६॥

शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् ।
ब्राह्मण्यं सकलं तस्य इति वेदानुशासनम् ॥ १७॥

अथ खलु सौम्येत परिव्राजका यथा प्रादुर्भवन्ति
तथा भवन्ति । कामक्रोधलोभमोहदम्भदर्पासूया-
ममत्वाहङ्कारादींस्तितीर्य मानावमानौ निन्दास्तुती
च वर्जयित्वा वृक्ष इव तिष्ठासेत् । छिद्यमानो न
ब्रूयात् । तदैवं विद्वांस इहैवामृता भवन्ति ।
तदेतदृचाभ्युक्तम् ।
बन्धुपुत्रमनुमोदयित्वा-
नवेक्ष्यमाणो द्वन्द्वसहः प्रशान्तः ।
प्राचीमुदीचिं वा निर्वर्तयंश्चरेत
पात्री दण्डी युगमात्रावलोकी ।
शिखी मुण्डी चोपवीती कुटुम्बी
यात्रामात्रं प्रतिगृह्णन्मनुष्यात् ॥ १८॥

अयाचितं याचितं वोत भैक्षं
मृद्दार्वलाबूफलपर्णपात्रम् ।
क्षीणं क्षौमं तृणं कन्थाजिने च पर्ण-
माच्छादनं स्यादहतं वा विमुक्तः ॥ १९॥

ऋतुसन्धौ मुण्डयेन्मुण्डमात्रं
नाधो नाक्षं जातु शिखां न वापयेत् ।
चतुरो मासान्ध्रुवशीलतः स्या-
त्स यावत्सुप्तोऽन्तरात्मा पुरुषो विश्वरूपः ।
अन्यानथाष्टौ पुनरुत्थितेऽस्मि-
न्स्वकर्मलिप्सुर्विहरेद्वा वसेद्वा ॥ २०॥

देवाग्न्यगारे तरुमूले गुहायां
वसेदसङ्गोऽलक्षितशीलवृत्तः ।
अनिन्धनो ज्योतिरिवोपशान्तो
न चोद्विजेदुद्विजेद्यत्र कुत्र ॥ २१॥

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत् ॥ २२॥

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तत् ॥ २३॥

बाल्येनैव हि तिष्ठासेन्निर्विद्य ब्रह्मवेदनम् ।
ब्रह्मविद्या च बाल्यं च निर्विद्य मुनिरात्मवान् ॥ २४॥

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ २५॥

अथ खलु सौम्येदं परिव्राज्यं नैष्ठिकमात्मधर्मं
यो विजहाति स वीरहा भवति । स ब्रह्महा भवति । स भ्रूणहा
भवति । स महापातकी भवति । य इमां वैष्णवीं निष्ठां
परित्यज्यति । स स्तेनो भवति । स गुरुतल्पगो भवति । स मित्रध्रुग्भवति ।
स कृतघ्नो भवति । स सर्वस्माल्लोकात्प्रच्युतो भवति ।
तदेतदृचाभ्युक्तम् ।
स्तेनः सुरापो गुरुतल्पगामी
मित्रध्रुगेते निष्कृतेर्यान्ति शुद्धिम् ।
व्यक्तमव्यक्तं वा विधृतं विष्णुलिङ्गं
त्यजन्न शुद्ध्येदखिलैरात्मभासा ॥ २६॥

त्यक्त्वा विष्णोर्लिङ्गमन्तर्बहिर्वा
यः स्वाश्रमं सेवतेऽनाश्रमं वा ।
प्रत्यपत्तिं भजते वातिमूढो
नैषां गतिः कल्पकोट्यापि दृष्टा ॥ २७॥

त्यक्त्वा सर्वाश्रमान्धीरो वसेन्मोक्षाश्रमे चिरम् ।
मोक्षाश्रमात्परिभ्रष्टो न गतिस्तस्य विद्यते ॥ २८॥

पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति ।
तमारूढच्युतं विद्यादिति वेदानुशासनम् ॥ २९॥

अथ खलु सौम्येमं सनातनमात्मधर्मं वैष्णवीं
निष्ठां लब्ध्वा यस्तामदूषयन्वर्तते स वशी भवति ।
स पुण्यश्लोको भवति । स लोकज्ञो भवति । स वेदान्तज्ञो भवति ।
स ब्रह्मज्ञो भवति । स सर्वज्ञो भवति । स स्वराड् भवति ।
स परं ब्रह्म भगवन्तमाप्नोति । स पितॄन्सम्बन्धिनो
बान्धवान्सुहृदो मित्राणि च भवादुत्तरयति । तदेतदृचाभ्युक्तम् ।

शतं कुलानां प्रथमं बभूव
तथा पराणां त्रिशतं समग्रम् ।
एते भवन्ति सुकृतस्य लोके
येषं कुले संन्यसतीह विद्वान् ॥ ३०॥

त्रिंशत्परास्त्रिंशदपरांस्त्रिंशच्च परतः परान् ।
उत्तरयति धर्मिष्ठः परिव्राडिति वै श्रुतिः ॥ ३१॥

संयस्तमिति यो ब्रूयात्कण्ठस्थप्राणवानपि ।
तारिताः पितरस्तेन इति वेदानुशासनम् ॥ ३२॥

अथ खलु सौम्येमं सनातनमात्मधर्मं वैष्णवीं
निष्ठां नासमाप्य प्रब्रूयात् । नानूचानाय
नानात्मविदे नावीतरागाय नाविशुद्धाय नानुपसन्नाय
नाप्रयतमानसायेति ह स्माहुः । तदेतदृचाभ्युक्तम् ।
विद्या ह वै ब्राह्मणमाजगाम
गोपाय मां शेवधिष्टेऽहमस्मि ।
असूयकायानृजवे शठाय
मा मा ब्रूया वीर्यवती तथा स्याम् ॥ ३३॥

यमेव विद्याश्रुतमप्रमत्तं
मेधाविनं ब्रह्मचर्योपपन्नम् ।
अस्मा इमामुपसन्नाय सम्यक्
परीक्ष्य दद्याद्वैष्णवीमात्मनिष्ठाम् ॥ ३४॥

अध्यापिता ये गुरुं नाद्रियन्ते
विप्रा वाचा मनसा कर्मणा वा ।
यथैव तेन न गुरुर्भोजनीय-
स्तथैव चान्नं न भुनक्ति श्रुतं तत् ॥ ३५॥

गुरुरेव परो धर्मो गुरुरेव परा गतिः ।
एकाक्षरप्रदातारं यो गुरुं नाभिनन्दति ।
तस्य श्रुतं तथा ज्ञानं स्रवत्यामघटाम्बुवत् ॥ ३६॥

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
स ब्रह्मवित्परं प्रेयादिति वेदानुशासनम् ॥ ३७॥

इत्युपनिषत् ॥

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ हरिः ॐ तत्सत् ॥

इति शाट्यायनीयोपनिषत्समाप्ता ॥